जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ २६ ॥
( योगवा० ३।६।१४ )

अनासाखिलशैलादि - प्रतिबिम्बे हि यादृशी ।
स्याद् दर्पणे दर्पणता केवलात्मस्वरूपिणी[१६] ॥ २७ ॥
( योगवा० ३।४।५६ ) ।

अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे ।
स्यात्तादृशी केवलता स्थिते द्रष्टर्य्यवीचणे[१७] ॥ २८ ॥
( योगवा० ३ ४।५८ ) ।

चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यनिलयं यदनाधि निरामयम्[१८] ॥ २९ ॥

न शून्यं नापि चाकारं न दृश्यं न च दर्शनम्[१९] ।
अनाख्यमनभिव्यक्तं तत् किञ्चिदवशिष्यते ॥ ३० ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे जीवन्मुक्तिपरममुक्त्योः परिच्छेदः ।

इति साङ्ख्यसारस्योत्तरभागः ।

सांख्यसारः समाप्तः ॥

— ** : —

---

१६. स्व-स्वरूपमात्रपर्यवसन्नेत्यर्थः ।

१७. द्रष्टरि अवीचणे स्थिते = यदा आत्मा वृत्तिसंबन्धहीनरूपेण अवतिष्टते तदा । अवीचणे=दृश्यसंबन्धशून्ये ।

१८. अनाधि=आधिहीनं ( आधिः=मानसी पोड़ा ) ।

१९. अत्र दर्शनं वृत्त्यात्मकज्ञानम् नतु स्वरूपज्ञानम्

इति रामशंकर-भट्टाचार्य-विरचिता सांख्य-सार-टीका समाप्ता ।